श्रोत्रादीनामि[1]ति परीक्षापरं चेदं वाक्यम् । तथाहि—शब्दग्रहणं करणजन्यं क्रियात्वात् छिदिक्रियावदिति श्रोत्रसद्भावसिद्धिः । एवं स्पर्शरूपरसगन्धग्रहणकरणतया त्वगादीन्द्रियसिद्धिरवगन्तव्या । तथाहि—वर्णावर्णात्मना द्विविधशब्दग्रहणं श्रोत्रेण करणेन विना नोपपद्यते । बधिरस्य तद्ग्रहणादर्शनात् । एवं शीतोष्णमृदुकठिनद्रवतीक्ष्णादिस्पर्शग्रहणं च त्वगिन्द्रियेण विना न स्यात् । त्वग्दोषदूषितस्य तदनुपलम्भात् । तथाहि—श्वेतरक्तकृष्णपीतहरितधूम्रश्यामह्रस्वदीर्घादिभे[2]दैर्भिन्नरूपग्रहणं चक्षुः करणं विना न संभवति । अन्धस्य तद्दर्शनासंभवात् । एवं मधुराम्लतिक्तलवणकटुकषायात्मना षड्विधरसग्रहणमपि तत्प्रवर्तकरसनकरणेन विना न स्यात् । जाड्योपप्लुतरसनेन्द्रियवतस्तदै[3]नवगमात् । तथा सुरभ्यसुरभ्यात्मना द्विविधगन्धग्रहणं च तत्करणनासिकाकरणं विना न संभवति । अघ्रातृ[4]त्वदूषितेन्द्रियस्य तदनुपलब्धेरिति ॥ ९ ॥

कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानीति पञ्च भवन्ति । तेषां व्यापारमन्तःकरणानां विभागं चोत्तरश्लोकेनाह—

**वचनादानविहरणोत्सर्गानन्दाश्च कर्मैषाम् ।**
**अन्तःकरणं त्रिविधं बुद्धिरहंकारचेतसी चेति ॥ १० ॥**

---

१. 'म् । प' ग. पाठः. २. 'दभ' ख. पाठः. ३. 'दव' क. पाठः. ४. 'ल' ख. पाठः.

इति। एषा कर्मसाधनतया कर्मेन्द्रियाणां वचनादीनि कर्माणि। परीक्षार्थं चेदं वाक्यम्। तथाहि — शब्दोच्चारणान्यथानुपपत्त्या तत्करणभूतवागिन्द्रियसद्भावोऽवगम्यते। न च तदधिष्ठानं वागिन्द्रियमिति वाच्यम्। मूकस्यापि शब्दोच्चारणप्रसङ्गादिति। एतदिन्द्रियान्तरेष्वप्यवगन्तव्यम्। अन्यथा कौण्यपङ्गुत्वोदावर्तक्लैब्यात्मकेन्द्रियवतः आदानादिप्रसङ्गात्। तदुक्तं सांख्यैः —

"बाधिर्यं कुष्ठितान्धत्वं जडताजिघ्रता तथा।
मूकता कौण्यपङ्गुत्वं क्लैब्योदावर्तमन्दताः॥"

इति। तस्मादधिष्ठानातिरिक्तानामतीन्द्रियाणामिन्द्रस्यात्मनश्चिह्नत्वेनेन्द्रियशब्दवाच्यानां सद्भावः सिद्ध इति। विमतानीन्द्रियाण्यतीन्द्रियाणि इन्द्रियत्वान्मनोवदिति च तेषा(मि ? मती)न्द्रियत्वसिद्धिरिति। आभ्यन्तरं करणमन्तःकरणं त्रिविधं केन रूपेणेत्यत आह — बुद्धिरहंकारचेतसी चेतीति। बुद्धिरहङ्कारो मनश्चेति। अथवा अन्तःकरणमेकैकं त्रिविधं भूतभविष्यद्वर्तमानविषयभेदात्। तदुक्तं मातङ्गे —

"यदन्तःकरणं नाम त्रिकालविषयात्मकम्।
यतोऽवसीयते तस्माच्चिरकालानुसञ्चितम्॥
वर्तमानमतीतं च यच्चेष्यमनुमानतः॥"

इति। तथा साङ्ख्यैश्च —

"साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्"

इति॥ १०॥

---

१. 'यं मतम्' ख. ग. पाठः.

बाह्यकरणभेदं तन्मात्रवृत्तिं चाह—

**बुद्धीन्द्रियकर्मेन्द्रियभेदाद् बाह्यं पुनर्दशधा ।**
**तन्मात्रेभ्यः खपवनतेजोऽम्भःक्ष्मेति पञ्च भूतानि ॥ ११ ॥**

इति । बाह्यं करणं दशविधं—पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणीति । अथवा अन्तःकरणं बुद्ध्यहंकारमनोरूपम् । कर्मेन्द्रियबुद्धीन्द्रियात्मकं बाह्यं च कार्यभेदात् त्रिविधं च । अन्तःकरणस्य प्राणादिवृत्त्या शरीरधारणलक्षणं, बुद्धीन्द्रियाणां प्रकाशः, कर्मेन्द्रियाणामाहरणमिति । तदुक्तं—

"करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम्"

इति । मनःपूर्वाणामिन्द्रियाणां षडध्वव्याप्तिः क्रमेणोच्यते—उकारो वर्णः । ओंधूमेत्यादि द्वे पदे । तत्पुरुषपञ्चार्णौ मन्त्रौ । मनस्तत्त्वम् । माकोटाख्यं भुवनम् । निवृत्तिः कला । नकारो वर्णः । शर्वमहेश्वरौ पदे । कवचपञ्चार्णौ मन्त्रौ । श्रोत्राख्यं तत्त्वम् । मण्डलेश्वरं भुवनम् । शान्त्यतीता कला । पकारो वर्णः । महादेवेत्यादि द्वे पदे । शिखापञ्चार्णौ मन्त्रौ । त्वगात्मकं तत्त्वम् । कालञ्जरं भुवनम् । शान्तिः कला । ढंकारो वर्णः । महातेजादि द्वे पदे । शिरःपञ्चार्णौ मन्त्रौ । चक्षुराख्यं तत्त्वम् । शङ्कुकर्णं भुवनम् । विद्या कला । बकारो वर्णः । मुञ्च मुञ्चेत्यादि द्वे पदे । हृदयपञ्चार्णौ मन्त्रौ । वागात्मकं तत्त्वम् । मण्डलेश्वरं भुवनम् । शान्त्यतीता कला । यकारो वर्णः । सर्वसान्निध्यकरणेत्यादि द्वे पदे । अघोरपञ्चार्णौ

---

१. 'अ' क. पाठः. २. 'ञ्ज', ३. 'फ', ४ 'रेत्या' ख. पाठः.

मन्त्रौ। पाण्यात्मकं तत्त्वम्। कालञ्जरं भुवनम्। शान्तिः कला। र इति वर्णः। अनर्चितेत्यादि द्वे पदे। वामदेवपञ्चार्णौ मन्त्रौ। पादात्मकं तत्त्वम्। शङ्कुकर्णं भुवनम्। विद्या कला। लकारो वर्णः। पूर्वस्थितेत्यादि द्वे पदे। सद्योजातपञ्चार्णौ मन्त्रौ। पाय्वात्मकं तत्त्वम्। स्थूलेशं भुवनम्। प्रतिष्ठा कला। वकारो वर्णः। तुरुं तुविंत्यादि द्वे पदे। अस्त्रपञ्चार्णौ मन्त्रौ। उपस्थात्मकं तत्त्वम्। स्थलेश्वरं भुवनम्। निवृत्तिः कला॥ ११॥

तन्मात्रेभ्य इत्यत्र कानि तन्मात्राणि तेभ्यः कथं भूतानामुत्पाद इत्यत आह—

**तन्मात्राण्यविशेषाः शब्दादीनां प्रकीर्तिताः पञ्च।**
**भूतानि पञ्च तेभ्यो भवन्ति तान्येकगुणवृद्ध्या॥१२॥**

इति। अविशेषाः सूक्ष्माः शब्दादयः पञ्च तन्मात्राणीत्युच्यन्ते। मात्रशब्देन भूतसंश्लेषो भूतभावेन परिणामो वा व्युदस्तः। केवलाः शब्दादयः सूक्ष्मत्वेनावस्थितास्तन्मात्राणीत्यर्थः। तेभ्यस्तन्मात्रेभ्यः पञ्चभ्यः पञ्चभूतान्येकैकगुणवृद्ध्या भवन्तीति। तथाहि— शब्दतन्मात्राच्छब्दैकगुणमाकाशमुत्पद्यते। शब्दतन्मात्रसहितात् स्पर्शतन्मात्राच्छब्दस्पर्शगुणो वायुः। उक्ततन्मात्रद्वयसहिताद् रूपतन्मात्राच्छब्दस्पर्शरूपगुणं तेजः। उक्ततन्मात्रसहिताद् रसतन्मात्राच्चतुर्गुणा आपः। शब्दस्पर्शरूपरसतन्मात्रसहिताद् गन्धतन्मात्रोपा-

---

१. 'रू' ग. पाठः.

दानकारणाच्छब्दस्पर्शरूपरसगन्धात्मकपञ्चगुणा पृथिवी समुत्पद्यत इति। अपरे केवलेभ्यस्तन्मात्रेभ्यः केवलानि भूतानीत्याहुः। अन्ये तु शब्दतन्मात्रादाकाशस्पर्शतन्मात्रावुत्पद्येते। स्पर्शतन्मात्राद् वायुरूपतन्मात्रौ। रूपतन्मात्रात् तेजोरसतन्मात्रौ। रसतन्मात्राज्जलगन्धतन्मात्रौ। गन्धतन्मात्रात् केवला पृथिवीति। तदुक्तं—

"तामसतो भूतादेरहंकृतेर्भवति शब्दतन्मात्रम्।
तस्मादपि तन्मात्रादाकाशः स्पर्शतन्मात्रः॥
रूपरसगन्धमात्रं पवनाद्यैः सह यथोत्तरं भवति।
पूर्वस्मात् तन्मात्रात् केवलतो गन्धतः पृथिवी॥"

इति। परे शब्दतन्मात्रादाकाशः, तद्द्वयसहितात् स्पर्शतन्मात्राद् वायुः। तत्त्रयसहिताद् रूपतन्मात्रात् तेजः, तच्चतुष्कसहिताद् रसतन्मात्रादापः, तत्पञ्चकसहिताद् गन्धतन्मात्रात् पृथिवीत्याहुः। अपरे शब्दतन्मात्रादाकाशः, तस्मात् स्पर्शतन्मात्रं, तस्माद् वायुः, तस्माद् रूपतन्मात्रं, तस्मात् तेजः, तस्माद् रसतन्मात्रं, तस्मादापः, ताभ्यो गन्धतन्मात्रं, तस्मात् पृथिवीति ब्रुवत इति। तन्मात्राणां षडध्वव्याप्तिः— णकारो वर्णः। अनादेत्यादि द्वे पदे। अघोरपञ्चाणौ मन्त्रौ। शब्दतन्मात्रं तत्त्वम्। मण्डलेश्वरं भुवनम्। शान्त्यतीता कला। तकारो वर्णः। धूत्रयादि द्वे पदे। वामदेवपञ्चाणौ मन्त्रौ। स्पर्शतन्मात्रं तत्त्वम्। कालञ्जरं भुवनम्। शान्त्यतीता कला। थकारो वर्णः। ओं भुव इत्यादि द्वे पदे। सद्योजातपञ्चाणौ मन्त्रौ। रूपतन्मात्रं तत्त्वम्। शङ्कुकर्णं भुव-

नम् । विद्या कला । दकारो वर्णः । अनिधनादि द्वे पदे । अस्त्रपञ्चार्णौ मन्त्रौ । रसतन्मात्रं तत्त्वम् । स्थूलेशं भुवनम् । प्रतिष्ठा कला । धकरो वर्णः । निधनोद्भवेति पदम् । नेत्रपञ्चार्णौ मन्त्रौ । गन्धतन्मात्रं तत्त्वम् । स्थलेश्वरं भुवनम् । निवृत्तिः कलेति ॥ १२ ॥

अथ पञ्चानां भूतानां व्यापारमाह—

**अवकाशव्यूहनपाचनसंग्रहधारणं क्रमादेषाम् ।**
**व्यापारो भूतानां व्योमादीनां समुद्दिष्टः ॥ १३ ॥**

इति । अवकाशः स्थानप्रदानं व्योम्नो व्यापारः, भेदकारणत्वात् । व्यूहनं विविधवहनं वायोर्व्यापारः, पुञ्जीकरणं वा । पाचनं परिपाककरणं तेजसो व्यापारः । संग्रहः संश्लेषणमपां व्यापारः, क्लेदनं वा । धारणं सम्भरणं पृथिव्या व्यापार इति । तदुक्तं—

"व्योम्नोऽवकाशदानं व्यूहो वायोर्हविर्भुजः पाकः ।
संग्रहणमपां धारणमुर्व्याः सर्वात्मना वृत्तिः ॥"

इति । आकाशमत्र परमं भूतं, तच्छब्दगुणं, शब्दतन्मात्रादुत्पन्नत्वात । यथा मृदुत्पन्नो घटो मृद्गुणः, कार्पासादुत्पन्नस्तन्तुः कार्पासगुणः एवं शब्दादुत्पन्न आकाशः शब्दगुण इति । तदिदं भूतमवश्याश्रयणीयम् । अन्यथा मूर्तवस्तुनो गमनागमनवृद्धिसंरोहणव्यायामादिसर्वव्यापाराभावप्रसङ्गादिति । तदुक्तं पारमेश्वरे—

---

१. 'धा', २. 'हगुण' ख. पाठः

"आकाशं शब्दतन्मात्रादवकाशकलक्षणम् ।
व्यक्तं व्यक्तिकरं विप्र! पृथक् संस्थानसिद्धये ॥"

इति । तदेकममूर्तमूर्तघटकुम्भमठकूपाद्युपाधिभेदादनेकभेद-भिन्नम् । तस्य वर्णमनिर्देश्यं शुद्धस्फटिकसन्निभमिति । अ-परे चन्द्रमण्डलाकारं मण्डलमिति । तदुक्तं —

"तद्बाह्ये तु भवेद् व्योम भूतत्त्वे संव्यवस्थितम् ।
अप्रतर्क्यमविज्ञेयं मोक्षस्थानमिवापरम् ॥"

इति । अस्य षडध्वव्याप्तिः — शकारो वर्णः । पिङ्गपिङ्गेत्यादि द्वे पदे । नेत्रपञ्चार्णौ मन्त्रौ । आकाशात्मकं तत्त्वम् । वस्त्रा-पदाद्यष्टौ भुवनानि । शान्त्यतीता कला । नीरूपस्पर्शवान् वायुः । स शब्दस्पर्शगुणः । 'आकाशाद् वायुरि'त्यागमबलात् परमाणोरुत्पत्तिर्बाधिता । स त्रिविधः शरीरं प्राणो विषय-श्चेति । यातनादेः शरीरस्य वायवीयत्वं तदाधिक्याद् , न ता-वन्मात्रत्वात् । प्राणः शरीरस्थोऽन्तःकरणसामान्यवृत्तिरूपः । तदुक्तं —

"स्वालक्षण्या वृत्तिस्त्रयस्य सैषा भवत्यसामान्य[1] ।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥"

इति । इतरो विषयवायुः । तदुक्तं मातङ्गे —

"येनाविष्टं जगत् कृत्स्नं स्फुरते बुद्धिमेति च ।
यत्र बद्धा विमानानां कोटयोऽष्टौ च विंशतिः ॥
भ्रमन्ति चक्रवत् सोऽयं वायुः प्राणभृतां वरः ।"

इति ।

"अस्याञ्जननिभं वर्णं वृत्तं षड्बिन्दुमण्डलम् ।"

तदुक्तं —

"तद्बाह्ये वायुतत्त्वं तु भिन्नाञ्जनसमप्रभम् ।
घर्घरारावमुखरं महाबलजनाकुलम् ॥"

इति । अस्य षडध्वव्याप्तिः — षकारो वर्णः । शब्दशब्देत्यादि द्वे पदे । कवचपञ्चार्णौ मन्त्रौ । वाय्वात्मकं तत्त्वम् । गयाद्यष्टौ भुवनानि । शान्तिः कला । भास्वररूपं तेजः । तद् द्विविधम् आभ्यन्तरं बाह्यं चेति । शरीरान्तर्वर्तिभुक्ताहारपाकसाधनमाभ्यन्तरम्, इतरद् बाह्यम् । तच्च द्विविधं शरीरं विषय इति । देवर्षीणां देहस्तैजसः ।

"तैजसानि शरीराणि भवन्त्यद्भुतकर्मणाम्"

इति वचनात् । इतरत् सूर्यसोमवह्निविद्युदादि । तस्य वर्णं विद्युन्निभम् । तदुक्तं —

"तेजस्तत्त्वं तु तद्बाह्ये विद्युत्कोटिसमप्रभम् ।
मेघस्तनितनिर्घोषं तेजोरूपं जनाकुलम् ॥"

इति । मण्डलं स्वस्तिकलाञ्छितं त्रिकोणम् । अस्य षडध्वव्याप्तिः — सकारो वर्णः । शिवशर्वेति पदम् । शिखापञ्चार्णौ मन्त्रौ । तैजसं तत्त्वम् । श्रीशैलाद्यष्टौ भुवनानि । विद्या कला । स्वतोद्रवा आपः शब्दस्पर्शरूपरसगुणाः । तत्र स्वकीयो रसगुणः । त्रयोऽन्ये सङ्करजाः । तदुक्तं पारमेश्वरे —

"रसः स्वाख्योऽत्र बोद्धव्यस्त्रयोऽन्ये संकरोद्भवाः"

इति । तद् द्विविधं शरीरं विषय इति । शरीरं वरुण-

---

१. 'पवत्तेजः' ग. पाठः.

लोकस्थानाम् । विषयभूतमितरद्, भोग्यत्वात् । स्फटिक-वर्णं चैतत् । तदुक्तं चन्द्रज्ञाने —

"पृथिवीतत्त्वमाक्रम्य जलं दशगुणं बहिः ।
ब्रह्माण्डाधारभूतं तु शुद्धस्फटिकसन्निभम् ॥"

इति । अस्य षडध्वव्याप्तिः — हकारो वर्णः । सर्वदादि[1] द्वे पदे । शिरःपञ्चार्णौ मन्त्रौ । अबात्मकं तत्त्वम् । अमरेशा-द्यष्टौ भुवनानि । प्रतिष्ठा कला । गन्धवती पृथिवी, पञ्च-गुणा च । तदुक्तं पारमेश्वरे —

"संक्षुब्धाद् गन्धतन्मात्राद् गुणैः पञ्चभिरन्विता ।
स्वाख्योऽस्या गन्ध एवोक्तश्चत्वारोऽन्येऽनुषङ्गजाः ॥
सारं तावत् परा काष्ठा नखदन्तास्थिजातयः[2] ।"

इत्यादि । सा चेयं शरीरं विषय इति द्विविधा । शरीरं च स्था-वरजङ्गमात्मना द्विविधम् । स्थावरं तृणादिवृक्षान्तम् । जङ्गमं चतुर्विधं जरायुजमण्डजं स्वेदजमयोनिजं चेति । मनु-ष्यपशुमृगाणां जरायुजम् । पक्षिसरीसृपाणामण्डजम् । यूक-मत्कुणपतङ्गादीनां स्वेदजम् । भुवनेशदेवर्षीणामयोनिजं चेति । ब्रह्माण्डतदन्तर्वर्तिसप्तद्वीपपातालाष्टाविंशतिकोटिन-रकतावत्संख्यविमानादयः पुराणशतेतिहाससिद्धा विषयाः, भोग्यत्वादिति । अण्डात्मकं क्षितितत्त्वं शतकोटियोजनविस्तृ-तम् । तदुक्तं शैवरहस्ये —

"पार्थिवमन्तिमतत्त्वं ब्रह्माण्डात्मकमखण्डमपि तावत् ।
विस्तारायामाभ्यामुक्तं शतकोटियोजनम्"

---

१. 'र्वादि', २. 'यतः ।' ग. पाठः.

इति । मतङ्गपारमेश्वरे च —

"एवं कोटिशतं पूर्णं पार्थिवं तत्त्वमत्र तु ।
अस्माद् दशगुणं तोयं तोयादग्निस्ततोऽनिलः ॥
वायोः खं खादहङ्कारस्तस्माच्च परतो महान् ।
महतः परतो ज्ञेयं गुणानां त्रितयं मुने! ॥
गुणत्रयात् प्रधानाख्यं तत्त्वं दशगुणोत्तरम् ।
शतोत्तरगुणानि स्युर्मायान्तान्यपि रागतः ॥
सहस्रवृद्धं विद्याख्यं लक्षमैशं ततस्ततः ।
कोट्या विवर्धितं[1] भूयः शिवतत्त्वं प्रकीर्तितम् ॥
अनन्तरमनन्तं स्यादप्रमेयं च शाश्वतम् ।"

इति । एतत् क्षितितत्त्वं स्वर्णनिभम् । तदुक्तं चन्द्रज्ञाने —

"सौवर्णं पृथिवीतत्त्वं सूर्यकोटिसमप्रभम् ।
कुक्कुटाण्डनिभं चैतद् ब्रह्माण्डं परिकीर्तितम् ॥"

इति । चतुरश्रं वज्रलाञ्छितं चन्द्रमण्डलम् ।

"ब्रह्माद्या देवता ज्ञेयाः क्ष्मादीनां पञ्च वै क्रमात् ।
शिवादिपृथिव्यन्तेषु तत्त्वेषु सकलेष्वपि ॥
भुवनानि चतुर्विंशत्यधिकं तु शतद्वयम् ।"

अस्याः षडध्वव्याप्तिः — क्षकारो वर्णः । शिवायौं नमो[2] नम इति पदम् । हृदयपञ्चाणौं मन्त्रौ । पार्थिवं तत्त्वम् । कालाग्न्यादिभद्रकाल्यन्तान्यष्टोत्तरशतं भुवनानि । निवृत्तिः कला इति ॥ १३ ॥

इति तत्त्वप्रकाशतात्पर्यदीपिकायामशुद्धवर्गविनिर्णयः
चतुर्थः परिच्छेदः ।

---

१. 'पि', २. 'नम' ख. पाठः.

## अथ पञ्चमः परिच्छेदः ।

अथैवं गुणसाम्यात्मकात् प्रधानादुत्पन्नानि त्रयोविंशतितत्त्वानि कार्यकारणात्मना द्विविधानि । तत्र तन्मात्रापञ्चकभूतपञ्चकात्मना दशविधं कार्यम् । बाह्याभ्यन्तरभेदेन त्रयोदशविधं कारणम् । तयोर्विनियोगं[1] दर्शयति —

**कार्यमिदं दशधा यत् तत् करणैः कार्यते समाविश्य ।**
**करणान्यसमर्थत्वात् कार्यं संश्रित्य चेष्टन्ते ॥ १ ॥**

इति । अयमभिप्रायः — दशविधं यत् कार्यं तत् करणैः कार्यते स्वीक्रियते गृह्यत इति यावत् । कार्यं शरीरं सूक्ष्मस्थूलात्मना दशविधम् । समाविश्य संश्रित्य । आश्रयं विना तेषां चेष्टितुमशक्यत्वादित्यर्थः । अथवा कार्यं विषयम्(?) । दशविधमिदम् । तत् करणैः विषयीक्रियते । समाविश्य सम्बध्येति ॥ १ ॥

तदेवं षट्त्रिंशत्तत्त्वानां स्वरूपमभिधाय साम्प्रतं शुद्धानीत्यादिना सूचितं शुद्धत्वं शुद्धाशुद्धत्वमशुद्धत्वं च प्रतिपादयितुं तद्धेतुमाह —

**पञ्चानामाद्यानां चिद्रूपतयान्वयः परेषां तु ।**
**मायाद्यानां द्वेधा सप्तानां कीर्तितः शैवे ॥ २ ॥**
**अव्यक्तप्रभृतीनां गुणैस्तु सुखदुःखमोहरूपतया ।**
**अन्वय इह निखिलानां दशके ह्यन्ते विशेषोऽयम् ॥ ३ ॥**

इति । अयमभिप्रायः — एकजातिसमावेशोऽन्वयः समानरूपत्वम् ऐकात्म्यमिति यावत् । तत्र पञ्चानामाद्यानां

---

१. 'योर्योगं' ख. पाठः.

शिवशक्तिसदाशिवेश्वरविद्यातत्त्वानां चिद्रूपतयान्वयः । तेन कारणेन तेषां शुद्धत्वं, ज्ञानरूपस्याज्ञानमलसम्बन्धासंभवात् । मायाकालनियतिकलाविद्यारागपुरुषाणां सप्तानां द्वेधा चिदचिद्रूपतयान्वयः[1] । चिदनुविद्धाचिद्रूपत्वाद् मायादीनां पुरुषव्यतिरिक्तानां द्वेधा समन्वयः। पुरुषस्य[2] चित्स्वभावस्योपाधिकृताचिद्रूपत्वादिति । यथा जपासन्निधानात् स्वतः शुद्धस्य स्फटिकस्य रागः, तथा पुरुषस्याप्युपाधिधर्माध्यारोपादचिद्रूपत्वमिति । तेन सप्तानां मायादीनां शुद्धाशुद्धत्वमिति । अव्यक्तादीनां बाह्यतया चित्संबन्धरहितानां सुखदुःखमोहरूपत्वेन गुणैरन्वयः । तेन तेषां केवलाशुद्धत्वमिति ॥ ३ ॥

अन्ते दशके भूततन्मात्रात्मके वक्ष्यमाणो([illegible]) विशेषः स किंलक्षण इत्यत आह —

**शब्दादेर्गुणसाम्ये तुल्यत्वेनान्वयोऽत्र विज्ञेयः ।**
**अङ्गाङ्गिभावविहितो भवति विशेषस्तु केषाञ्चित् ॥ ४ ॥**

इति । शब्दादीनां[3] त्रैगुणत्वसाम्ये सत्यप्यसमतया सम्बन्धो वेदितव्यः । अङ्गाङ्गिभावः कार्यकारणभावः, तेन विहितः प्रतिपन्नो भावसर्गाख्यो विशेषः केषांचित् कार्यरूपाणां कालाद्यवन्यन्तानां विज्ञेय इति । कार्याणां स्वसाधारणकारणेषु सत्त्वं भावसर्गः । तदुक्तं शैवरहस्ये —

"प्रातिस्विकेषु हेतुषु तत्तत्तत्त्वात्मकस्य सूक्ष्मस्य ।
कार्यस्यावस्थानं भावः सत्कार्यवादिमते ॥"

---

१. 'पान्व', २. 'स्य तु चि', ३. 'शब्दगु' ख. पाठः.

इति । सोऽयं भावसर्गः कार्यकारणभावेनावगम्यते । तथा-हि — कार्यकारणभावसंबन्धो नासति संबन्ध्यन्तरे कार्ये सम्भवतीत्यसतः खरविषाणादेरदर्शनात् । विमतानि कार्याणि कारणेषु सन्त्येव, उत्पत्तिमत्त्वात् । यत् कारणेष्वविद्यमानं न तदुत्पत्तिमत् यथा खरविषाणम् । नच तथैतानि नोत्पत्तिमन्ति । तस्मात् कारणेषु सन्त्येव इति । तथा उपादानकारणस्वीकाराच्च । यदि तिलेषु तैलं न स्यात्, तर्हि तैलार्थिनः सिकतेष्विव तिलेष्वपि स्वीकारो न स्यात् । न तदस्तीति तिलेषु तैलसद्भावसिद्धिः । एतस्मादेव कारणात् सर्वसद्भावाच्च सदेव कार्यम् । यदि कारणेष्वसत् कार्यं जायेत, तर्हि तस्मादेवाखिलकार्यसंभवप्रसङ्गः, असत्त्वस्य सर्वत्राविशेषात् । न च तदस्तीति सदेवोत्पद्यत इति । शक्तात् कारणाच्छक्यकार्यजननाच्च । यदि कारणेष्वविद्यमानं कार्यं जायेत, तर्ह्यशक्तादपि तदुद्भवप्रसङ्गः, असत्त्वे शक्तिकल्पनावैयर्थ्यात् । तथा शक्तेः कार्यसूक्ष्मावस्थारूपत्वाच्च सत् कार्यम् । तथा यद्यसत्कार्यमशक्यमपि तदा कार्यं जायेत, कारणस्य शक्तत्वात् न चासति कार्ये तत्रैव शक्तिरितिवक्तुं न शक्यते, असत्त्वेनाविशेषादिति । कारणत्वाच्च सत् कार्यम् । यदि कार्यं कारणे न स्यात् तदास्य कारणत्वमपि न स्याद् इतरसाधारण्यात् । तद् दृष्टमतः सत् कार्यमिति । तदुक्तम् —

"असदकरणादुपादानग्रहणात् सर्वसंभवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत् कार्यम् ॥"

---

१. 'क' ख. पाठः.

इति । नच सत्कार्यवादे कारणवैयर्थ्यप्रसङ्ग इति वाच्यम् । कारणानामभिव्यक्त्यर्थत्वात् । यथावघातदोहनापीडनैः तण्डुलक्षीरतैलानामुत्पत्तिः, तथा कालाद्यव्यन्यन्ततत्त्वानां तद्विकारभूतघटादीनां चोद्भव इति । विनाशश्च तेषां तिरोभाव एव, नासत्त्वामिति । नचाभिव्यक्तेरभिव्यक्त्यन्तराभ्युपगमेऽनवस्थेति वाच्यम् । उत्पत्तेरपि समानत्वात् । तथा पटोत्पत्तिः स्वकारणसमवायः स्वसत्तासमवायो वा नोत्पद्यते । तथापि[1] तदर्थानि कारकाणि व्यापार्यन्ते । एवं सत एव घटादेः स्वत एवाविर्भावाय कारणापेक्षेति युक्तम् । तदुक्तं भगवता विष्णुना —

"नासतो विद्यते भावो नाभावो विद्यते सतः"

इति । श्रीविष्णुपुराणे च —

"तदेतदक्षयं नित्यं जग[2]न्मुनिवराखिलम् ।
आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥"

इति । अथवा अङ्गाङ्गिभावविहितः कल्पितो विशेषः, हेतुमत्त्वानित्यत्वात् । व्यापित्वसत्क्रियत्वानेकत्वाश्रितत्वलिङ्गत्वसावयवत्वपरतन्त्रत्वादिधर्मैः[3] कालाद्यवन्यन्तानां व्यक्तानां विद्यत इति त्रिगुणत्वाविवेकित्वविषयत्वसामान्यत्वाचेतनत्वप्र[4]सवधर्मित्वा(द्य ? न्य)व्यक्ताख्यस्य मायातत्त्वस्यापि सन्ति । चिन्मात्रस्य शिवस्य पुंसो हेतुमत्त्वादिकं त्रिगुणत्वादिकं च

१. 'था त' ग. पाठः. २. 'गन्मुनि' ख. पाठः. ३. 'वर्गः का', ४. 'सिद्धिध' क. पाठः.

नास्ति । तयोः कार्यकारणभावविहितयोः कार्यकारणत्वशून्ये पुरुषेऽसंभवादिति केषांचिदेवायं धर्म इति । तदुक्तं—

"हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥
त्रिगुणमविवेकिविषयं सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥"

इति । अथवा अङ्गमचेतनं चेतनार्थत्वात् । तस्याङ्गी चेतनः शेषित्वात् तस्य । तयोर्भावः संबन्धः । तद्विपरीतो विशेषः इतरेतराध्यासोऽङ्गाङ्गिभावविहितो विशेष इति । तदुक्तं—

"तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥"

इति । अथवा अङ्गाङ्गिभावः प्रधानाप्रधानभावः । बुद्धिः प्रधानभूता, पुरुषस्यातिसन्निकृष्टत्वात्[1] । तस्यास्तेनाङ्गित्वम् । बाह्येन्द्रियाण्यङ्गानि अप्रधानानि, तत्साध्यत्वात् । तयोर्भावविहितो विशेषः केषांचित् कारणानामस्तीति । तदुक्तम्—

"एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषात् ।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥"
सर्वं प्रत्युपभोगं यस्मात् पुरुषस्य साधयति बुद्धिः ।
सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥"

इति । तस्मादेव तत्त्वानामुत्पत्तिरिति ॥ ४ ॥

एवं तत्त्वानां सृष्टिक्रमं स्थितिं चोक्त्वा संहारक्रममाह—

---

१. 'वि' ग. पाठः.

**तत्त्वानां स्थितिरेषा कथिता सृष्टिक्रमेण सर्वेषाम् ।**
**प्रतिलोमं परिणामान्मायायां तानि लीयन्ते ॥ ५ ॥**

इति । एतेषां तत्त्वानामुक्तेन प्रकारेण सृष्टिः स्वे स्वे कारणे स्थितिश्च कथिता । परिणामप्रतिलोमेन मायायां तानि स्वे स्वे कारणे लयं प्राप्य लीयन्त इति ॥ ५ ॥

मायायाः परस्ताद् यानि तत्त्वानि तेषां कुत्र लय इत्याशङ्क्याह —

**मायायाः परतोऽध्वा शुद्धः शक्तौ निलीयते सकलः ।**
**सर्वात्मनि सापि शिवे तिष्ठत्यविभागमापन्ना ॥ ६ ॥**

इति । मायायाः परतो यस्तत्त्वाध्वा शुद्धाख्यः, स सर्वोऽपि शक्तितत्त्वे लयं याति । सा शक्तिः शिवेनैक्यं प्राप्य तिष्ठति । निलीयत इति, "आनीदवातं स्वधया तदेकमि"ति श्रुतेस्तदवगमात् ॥ ६ ॥

ननु संहारदशायां सकलस्य विनाशेन पुनरुत्पादासंभव इत्याशङ्क्याह —

**माया पुरुषः शिव इत्येतत् त्रितयं महार्थसंहारे ।**
**अवशिष्यते पुनस्तत् प्रवर्तते पूर्ववत् सृष्टौ ॥ ७ ॥**

इति । महार्थानां कालाद्यवन्यन्ततत्त्वानां शुद्धानां च विद्येशसदाशिवानां संहारे मायापुरुषशिवानां जगत्कारणानां सद्भावात् पुनरपि जगदुत्पत्तिः संभवत्येव पूर्ववदिति ॥ ७ ॥

ननु तर्हि किं प्रलयेनेत्याशङ्क्याह —

**संसारे खिन्नानां सर्वेषां प्राणिनां प्रभुः कृपया ।**
**कुरुते महार्थसंहृतिमेतेषामेव विश्रान्त्यै ॥ ८ ॥**

इति । अनवरतमुपजायमानशरीरेन्द्रियविषयसंपर्कजातसुखदुःखानुभवव्यापारसञ्जातश्रमाणां प्राणिनां विश्रान्त्यर्थं करुणानुन्नहृदयः प्रभुर्महार्थसंहारं करोतीति । तदुक्तं—

"कार्यव्यासक्तचित्तानां विश्रान्त्यै रजनी यथा ।
संहारं भवखिन्नाना कृपया कुरुते शिवः ॥"

इति ॥ ८ ॥

इति तत्त्वप्रकाशतात्पर्यदीपिकायां सामान्यवादः
पञ्चमः परिच्छेदः ।

---

अथ षष्ठः परिच्छेदः ।

अथ तर्हि पुनः सर्गकारणमयुक्तं, विश्रामस्यैव पुरुषार्थत्वादित्याशङ्क्याह—

**कर्मविपाचनहताः पशुदयया पुनरपीह परमेशः ।**
**सृष्टिं विधाय कर्माण्येवं पाचयति देहभृताम् ॥ १ ॥**

इति । अयमभिप्रायः—निश्शेषदुःखनिवृत्तिनित्यनिरतिशयानन्दात्मकापवर्गविहीनान् पशुतयानधिगतपुरुषार्थान् कर्मबद्धान् दयार्हान् पशूनवलोकयन् भगवान् भोगेन कर्मबन्धविनिवृत्तये तत्साधनदेहेन्द्रियविषयसृष्टिं विधत्ते । तेषां कर्मबन्धविनिवृत्तिश्च मोक्षार्थेति मोक्षार्था सृष्टिरुपपन्नेत्यर्थः ॥ १ ॥

ननु केन तर्हि कर्मपाकः, कथं वा मोक्षसंभव इत्यत आह—

**भोगेन कर्मपाकं विधाय दीक्षां शिवः शक्त्या ।**
**मोचयति पशूनखिलान् करुणैकनिधिः सदा शंभुः ॥ २ ॥**

---

१. 'हा' ख. पाठः.

इति । अयमाशयः—भोगेन कर्मणः पाकं विनाशं कुर्वन् भगवान् कालं प्रतीक्षमाणः कर्मसाम्ये सति शक्तिर्मो- चिकां ? पाचयित्वाचार्यो भूत्वा दीक्षां विधायापवर्गार्हान् पशूनखिलान् सर्वदा सदा परमकारुणिकः शंभुर्मोचय- तीति । ननु न मोक्षाख्यः[1] पुरुषार्थोऽस्ति, नापि स्वर्गाख्यः, तयोः सद्भावे प्रमाणाभावात् । न चानुमानागमाभ्यां तयोः सद्भावसिद्धिरिति वाच्यम् । अनुमानागमयोरप्रामाण्यात् । तत्रानुमानस्याप्रामाण्यं व्याप्तिग्रहणसापेक्षस्यानुमानस्य तदसं- भवात् । स च देशान्तरकालान्तरगततयानध्यक्षयोः साध्य- साधनयोः, साहित्यानियमात्मकस्याविनाभावस्याध्यक्षतो ग्रह- णासंभवात् । नचानुमानात् तदविनाभावग्रहणमिति वाच्यम् । अन्योन्याश्रयप्रसङ्गाद् , व्याप्तिग्रहणे सत्यनुमानप्रवृत्तिः, अनु- मानप्रवृत्तौ व्याप्तिग्रहणमिति । नचानुमानान्तरेण व्या- प्तिग्रहणम् । अनवस्थाप्रसङ्गात् । नचागमाद् व्याप्तिग्रहणम् । तस्य सन्दिग्धत्वात् तदनुपलम्भाच्चेति । नचागृहीताविना- भावात् साधनात् साध्यसिद्धिरिति वाच्यम् । अतिप्रसङ्गात् । तस्मात् प्रत्यक्षमेव प्रमाणम् । तच्च स्वर्गापवर्गौ नावगमय- तीति काम एव मुख्यः पुरुषार्थः, अर्थश्च तत्साधनत्वादिति । तदुक्तं—"वृत्तिसाध्या प्रीतिः पुरुषार्थः, स काम एव ना- न्यो मोक्षादिः, दृष्टहान्यदृष्टकल्पनाप्रसङ्गादि"ति । तथा पृथि- व्यप्तेजोवायव एव तत्त्वानि, शरीरेन्द्रियविषयाणां तत्समुदा- यरूपतया तत्त्वान्तराभावात् । नच ज्ञानं तत्त्वान्तरम् । तस्य

१. 'ख्यं' ग. पाठः.

रजनीचूर्णसंबन्धादुपजायमानरागवद् भूतसमवायजन्यतया तद्धर्मत्वनिश्चयादिति चार्वाकः। तदयुक्तम्। अनुमानागमाप्रामाण्ये सन्दिग्धं विपर्यस्तं वा प्रतिपाद्यं प्रति प्रतिपादकस्य शब्दप्रयोगासंभवप्रसङ्गात्। तथाहि—अस्याज्ञानं सन्देहो विपर्यासो वा विद्यत इति प्रतिपाद्यशब्दादिना लिङ्गेनानुमाय मयोच्चारितेन शब्देनास्य यथार्थप्रतिपत्तिर्भविष्यति। सा तदज्ञानादिकं निर्णुदस्यती?त्याद्यनुमानपूर्वको हि परं प्रतिपाद्यं प्रति प्रतिपादकस्य शब्दप्रयोगः। अतत्पूर्वकत्वे शब्दप्रयोक्तुरुन्मत्तवदुपेक्षणीयताप्रसङ्गेन च परगताज्ञानसन्देहविपर्यासाः प्रत्यक्षतोऽवगन्तुं शक्यन्ते। अतोऽनिच्छतापि चार्वाकेणानुमानस्य चागमस्य च प्रामाण्यमभ्युपेतव्यम्। शब्दस्याप्रमासाधकत्वे प्रयोगासंभवप्रसङ्गात्। नच व्याप्तिग्रहणासंभवादनुमानाप्रामाण्यम्। सामान्योपग्राहकवशादखिलव्यक्तिषु संबन्धग्रहणवत् तदुपपत्तेः[1]। तथाहि—व्याप्तिग्रहणवेलायामल्पत्वादिविशेषं परित्यज्य धूमजातीयमग्निजातीयं न व्यभिचरतीति सामान्योपग्राहकवशादजातातिवृत्तप्रत्युत्पन्नाखिलव्यक्तीनां तत्तज्जातीयतया तथा व्याप्तिग्रहणे व्याप्तेर्गृहीतत्वान्न व्याप्तिग्रहणासंभव इति। सामान्ययोरेव व्याप्तिग्रहणम्, अधिकरणसिद्धान्तन्यायेन विशेषसिद्धेरिति। तदपास्तम्।

"विशेषेऽनुगमाभावात् सामान्ये सिद्धसाधनात्।
तद्वतोऽनुपपन्नत्वाद् अनुमानकथा कुतः॥"

इति। यतो व्याप्तिग्रहणादिसंभवस्योक्तत्वात्[2]। तथा भोज-

---

१. 'त्पत्तेः', २. 'णसं' ग. पाठः.

नादिसर्वक्रियासंभवश्च । तासामनुमानपूर्वकत्वात् । किञ्च, अवगताविनाभावस्य पुरुषस्य धूमदर्शनादग्निज्ञानमुपलभ्यते । तत् किंरूपमास्थेयम् । न तावद् विपर्ययरूपम् । बाधकाभावात्, प्रत्यक्षस(म्भा[1]?म्भ)वाच्च । नापि विकल्परूपम् । "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इत्युक्ततल्लक्षणाभावात् । नापि निद्रा । सुषुप्त्यभावात् । न च स्मृतिरूपम् । धूमादिसंभवसंस्कारमात्रजन्यत्वाभा[2]वादिदन्तया भासमानत्वात् तथाविधपूर्वानुभवाभावाच्चेति । नापि संशयरूपम् । अनवधारणज्ञानं संशय इत्युक्तसंशयलक्षणाभावात् । तस्मादेतज्ज्ञानं प्रमाणमेव । न च तत् प्रत्यक्षम् । अर्थेन्द्रियसंप्रयोगाजन्यत्वात् । न चाग्नेरर्थस्य चक्षुरादिना सम्प्रयोगोऽस्ति, आवृतत्वाद् इत्यग्निज्ञानकारणधूमज्ञाननिष्पादनार्थं चक्षुर्विज्ञानमग्निज्ञानार्थम् । स्वर्गादिज्ञानकारणशब्दज्ञानार्थश्रोत्रव्यापारवदिति । न चानुमितानुमानादौ चक्षुराद्यपेक्षेति प्रमाणान्तरमेवानुमानाख्यमिति सिद्धमनुमानमिति । आगमप्रामाण्यं च पूर्वमुपवर्णितमित्यलमतिप्रसङ्गेन । तथाहि — शरीरेन्द्रियै[3]र्वृत्तिसङ्घातः परार्थः भोगसाधनत्वात्, भोगसाधनं च जडत्वात्, जडं च कार्यत्वात्, गृहक्षेत्रादिवदिति भूतव्यतिरिक्तः पर आत्मा सिद्धः । तस्य नित्यत्वं, शरीरनाशे(त्य?ऽप्य)विनाशात् । स च जातिस्मृत्यादिनावगम्यते । तस्य मोक्षो बद्धत्वात् । अतो मोक्षस्य कादाचित्कतया कारणापेक्षा । कारणं च हिंसालक्षणधर्माधर्मसंयुताद्

---

१. 'म्पादाच्च' ग. पाठः. २. 'सम्भवा' ख. पाठः. ३. 'यस' ग. पाठः.

"अहिंस्यदेहाद्युद्भूतिर्मोक्षमाहुर्दिगम्बराः"

इति। तथाहि — नित्य(भा?ता)यां ग्रह अनित्यत्वे च द्वेष इत्युभयपरिहारार्थानेकान्तभावना। तथाहि — घटादिः मृदादिरूपेण नित्यः, सर्वावस्थासूपलम्भात्। घटादिरूपतया अनित्यः, तदपायात्। एवं स्वदेशकालकारणाधारतया सत्त्वमर्थानामन्यदेशादिष्वसत्त्वं, स्वकार्ये कर्तृत्वं कार्यान्तरे चाकर्तृत्वं, स्वशब्देनाभिधेयत्वम्, अन्यशब्देनानाभिधेयत्वमित्याद्यूह्यमर्थानामनेकान्तत्वमिति दिगम्बराः। तदिदमनुपपन्नम्। अनेकान्तभावनायां मिथ्यारूपतयापवर्गसाधनत्वासंभवात्[१]। तत्र स्वदेशादिषु सत्त्वादिनियत[२]रूपस्यैवोपलम्भात्। तथा घटादेश्च कार्यस्य नित्यत्वान्मृदादेः कारणस्य च नियमेन नित्यत्वाच्च नोभयात्मकत्वम्। एवं स्वशब्देनाभिधेयत्वमेवान्यशब्देन चाभिधेयत्वमेवेति नानेकान्तत्वमिति। या चेयमुभयरूपता प्रोक्ता तत्र विवादः। इतरेतराभावाभ्युपगमेनास्माभिरप्यभ्युपगतत्वात्। यदि च स्वदेशादिष्वप्यसत्त्वादिकं स्यात्, तदा स्यादर्थानामनेकान्तता। न च तदस्ति। तस्मान्नानेकान्तत्वमर्थानामिति मिथ्याभूतत्वान्नापवर्गकारणमनेकान्तज्ञानमिति। न चानेकान्तताभावनावशाद् विशिष्टप्रदेशे अक्षयशरीरादिप्राप्तौ प्रमाणमस्ति। न च तेषामागमः प्रमाणम्। तस्य प्रमाणमूलत्वाभावात्। न च प्रत्यक्षानुमाननित्यागमा मूलानामानित्यागमा[३]नु(?)शब्दानां प्रामाण्यं संभवतीत्युक्तम्। न च

---

१. 'कार्याप' ग. पाठः. २. 'म' ख. पाठः ३. 'माश्च' ग. पाठः.

शरीरेन्द्रियविषयाणां कार्याणां नित्यत्वं संभवति। अतिप्रसङ्गात्। यच्च शरीरपरिमितस्यात्मनः शरीरनाशे नक्षत्रादिवदवस्थानं निःश्रेयसमित्यार्हतैकदेशीयैरुक्तं, तदपि न चतुरश्रम्। देहपरिमितस्यात्मनो देहवन्मूर्ततयानित्यत्वप्रसङ्गात्। तथा गजशरीरावस्थितस्य मशकशररिप्रवेशे मृदङ्गपिहितप्रदीपप्रभाया घटपिधान इव सङ्कोचविकासाश्रयणेन परिणामित्वप्रसङ्गः। तस्माद् रूपरसगन्धस्पर्शशब्दज्ञानात्मकेषु षट्पदार्थेषु यद् दुःखसमुदायानिरोधमार्गाख्यं पदार्थचतुष्कं तस्मिन् क्षणिकादिभावनापवर्गकारणं, शुद्धचित्तसन्तानोत्पत्तिरपवर्ग इति सौगताः। दुःखं रूपादिस्कन्धपञ्चकम्। तच्च रूपस्कन्धो वेदनास्कन्धः संज्ञास्कन्धः संस्कारस्कन्धो विज्ञानस्कन्धश्चेति स्कन्धपञ्चकम्। तत्र वर्णगन्धरसस्पर्शात्मना चतुर्विधो रूपस्कन्धः। सुखा वेदना दुःखा वेदना मध्यमा वेदनेति त्रिविधो वेदनास्कन्धः। चक्षुःसंज्ञा जिह्वासंज्ञा श्रोत्रसंज्ञा घ्राणसंज्ञा स्पर्शसंज्ञेति षट्प्रकारः संज्ञास्कन्धः। संस्कारस्कन्धो द्विप्रकारः कुशलाकुशलभेदात्। तत्राकुशलो दशविधो मनोवाक्कायभेदैः। तत्र मानसा मिथ्यादर्शनाभिलाषप्रद्वेषास्त्रयः। वाचिका अनृतवचनपैशुन्यपरानिन्दाविप्रलम्भवचनानि चत्वारि। कायिका हिंसापरस्वहरणमैथुनयोगास्त्रयः। इ(ति ?-त्य)कुशलाः। कुशलाश्च दश विपरीताः। एवं संस्कारस्कन्धो विंशतिप्रकारः। चक्षुर्विज्ञानं श्रोत्रविज्ञानं घ्राणविज्ञानं स्पर्शविज्ञानं जिह्वाविज्ञानं मनोविज्ञानं चेति षट्प्रकारो विज्ञानस्कन्धः। इत्येष दुःखकारणत्वात् दुःखमिश्रत्वात् सुखमपि

दुःखम् । तस्य कारणं समुदायः । तयोर्निरोधो विनाशः, तस्योपायो मार्गः । क्षणिकादिभावेनैष क्षणिकमिति भावनावशात् (प्रा ? रा)गादिनिवृत्तिः । ममेदमिति सम्बन्धाभावात् । तथा निरात्मकभावनातश्च रागादिनिवृत्तिः, स्वपरसम्बन्धाभावात् । एवं सर्वं शून्यमिति भावनया रागादिनिवृत्तिः, असत्त्वात् । नहि गगनकुसुमवन्ध्यासुतादौ रागादिसम्भव इति शुद्धचित्तसन्तत्युद्भवोपपत्तिरिति वैभाषिकसौत्रान्तिकज्ञानाद्वैतवादिनो बौद्धाः । शुद्धचित्तसन्ततेरपि विनाशोऽपवर्ग इति शून्यवादिनः । तदिदमनुपपन्नम् । क्षणिकादिभावनानां मिथ्यारूपतया निःश्रेयससाधनत्वासंभवात् । न च सर्वे भावाः क्षणिकाः सत्त्वाद् विज्ञानवदित्यनुमानात् पदार्थां(नां) रूपरसगन्धस्पर्शविज्ञानानां क्षणिकत्वसिद्धेः क्षणिकत्वभावनाया न मिथ्यात्वमिति वाच्यम् । तस्याग्न्यनुष्णतासा(ध)ककृतकत्वानुमानवत् स एवायं घट इत्यादिप्रत्यक्षबाधया प्रामाण्यात् । न च स एवायं नखः, त एवामी केशा इत्यादिप्रत्यभिज्ञावदस्यापि न प्रामाण्यमिति वाच्यम् । अस्य बाधकाभावात् । न चानेनैवानुमानेनास्य बाध इति वाच्यम् । अनुमानस्य प्रत्यक्षमूलस्य स्वमूलबाधकत्वासम्भवात् । न चानुष्णतासाधकेनोष्णताग्राहिप्रत्यक्षं बाध्यत इति । तथा विज्ञानस्य त्रिक्षणस्थायितया क्षणिकत्वाभावात् साध्यविकलो दृष्टान्त इति । नन्वक्षणिकस्यार्थक्रियाकारित्वलक्षणसत्त्वासंभवादुपलभ्यमानं

---

१. 'म्बन्ध इ' क. पाठः. २. 'द्धि' ख. पाठः. ३. 'द्ध',
४. 'बाधक' ग. पाठः.

सत्त्वं पृथिव्यादिक्षणिकतां साधयेत्[1] । तथाहि — क्षणिको यदि स[2] निष्पाद्यं सर्वं युगपदेव करोति, नह्युत्तरादिक्षणेष्वपि । तदेव सर्वं ज्ञायत (?) तत्कारणस्य विद्यमानत्वात् । नहि कारणे सति कार्यानुत्पत्तिर्घटत इति । नापि क्रमेण । प्रथमक्षण एवोत्तरादिक्षणभाविनां कार्याणां कारणभूतस्यास्य सद्भावेन विलम्बनासंभवात् । न च सहकारिप्राप्त्यनुरूपेण कार्यजननमिति वाच्यम् । सहकारिणा[3] क्रियमाणस्य कारणातिशयविनाशस्य वा कारणाद् भिन्नत्वे तदितरविश्ववदुपेक्ष्यत्वात् । तथानतिशयानिवृत्त्यतिशयाधानहेतुत्वे सहकार्यपेक्षकारणे[4]भिन्नत्वेऽतदुत्पत्तौ तदुत्पादप्रसङ्गः । अतिशयाधानानतिशयानिवर्तकत्वे तदितरविश्ववत् सहकारिणामप्युपेक्ष्यत्वप्रसङ्ग इति । तस्मादर्थक्रियाकारित्वलक्षणसत्त्वविरहादसन्तोऽक्षणिका इति । अत्र प्रयोगः — यत् (क्रमा)क्रमाभ्यामजनकं तन्नास्ति यथा खरविषाणम् । क्रमाक्रमाभ्यामजनकाश्चाक्षणिका इति । तस्मात् पृथिव्यादिषु पक्षभूतेषूपलभ्यमानं सत्त्वं विपक्षे वृत्त्यसम्भवात् सपक्षाभावेऽपि क्षणिकत्वं साधयतीति । नैवम्[5] । अक्षणिकानामपि क्रमाक्रमाभ्यां सहकारिप्राप्तौ तथैव जनकत्वोपपत्तेः । ननूक्तं सहकारिणातिशयाधानं तदनतिशयनिवृत्तिर्वेति विकल्पोक्त[6] स(त्त्व ? त्वा)दनुपपन्नमस्यैवातिशयत्वात् । यद् यस्य सद्भावे कार्यं करोति, स तस्यातिशय इति मृदादिकारणं

---

१. 'हि — अक्ष', २. 'स्व', ३. 'णां' ख. पाठः. ४. 'णे', ५. 'वं, क्ष' ग. पाठः. ६. 'क्तसत्युप' ख. पाठः.

चक्रादिसहकारिसमवधाने घटादिकार्यजनकमुपलब्धमिति तत् तदतिशय इति ॥ २ ॥

ननु न षट्त्रिंशत् तत्त्वानीति शक्यते वक्तुं, शरीरघटादेरपि सद्भावादित्याशङ्क्याह —

**आप्रलयं तिष्ठति यत् सर्वेषां भोगदायि भूतानाम् ।**
**तत् तत्त्वमिति प्रोक्तं न शरीरघटादि तत्त्वमतः ॥ ३ ॥**

इति । अयमभिप्रायः — शरीरघटादेस्तत्त्वलक्षणाभावान्न तत्सद्भावेन तत्त्वाधिक्यम् । तथाहि — यद् आप्रलयावस्थायि सर्वभूतभोगकारणं तत्त्वमिति तत्त्वलक्षणं न शरीरघटादेरस्ति । तद्देशतत्कालव्याप्त्यभावात्[1] । तथा शरीरघटादीनां पृथिव्यादितत्त्ववृत्तिरूपतया बुद्धिवृत्तिरूपाध्यवसायादिवत् तत्त्वान्तरत्वासम्भवाच्च[2] न तत्त्वाधिक्यमिति । तदुक्तं गुरुदेवाचार्येण —

"ततत्वात् सन्ततत्वाच्च तत्त्वानीति ततो विदुः ।
ततत्वं देशतो व्याप्तिः सन्ततत्वं च कालतः ॥
लक्षादियोजनव्यापि तत्त्वमा प्रलयात् स्थितम् ।
अन्यथा स्तम्भकुम्भादिरपि तत्त्वं[3] प्रसज्यते ॥"

इति ॥ ३ ॥

प्रतिज्ञातार्थमुपसंहरति —

**तत्त्वं यतो भवेद् यत् कारणमापूरकं च तत्त्वस्य ।**
**कथिता व्यवस्थितिर्यन्निखिलानामेव तत्त्वानाम् ॥ ४ ॥**

---

१. 'तद्व्याप्त्य', २. 'स्य सम्भ' ख. पाठः. ३. 'स' ग. पाठः.

इति । अयमर्थः — शिवाद्यवनिपर्यन्तानां निखिलानां तत्त्वानां व्यवस्थितिः कथिता । तथा निखिलानां तत्त्वानामापूरकमाभीक्ष्ण्येन पूरकमध्वातीतं शिवाख्यं निष्कलं रूपं च कथितम् । "तेनेदं पूर्णं पुरुषेण सर्वम्" इति श्रुतेः । यतो भवति यत् तत्त्वं यत् कारणं चापूरकमुपकरणं वा, तच्च कथितमिति ॥ ५ ॥

शास्त्रस्वीकरणाय कर्तारं स्वात्मानमभिद्योतयति[1] —

**तत्त्वानामपि तत्त्वं येनाखिलमेव हेलया कथितम् ।**
**श्रीभोजदेवनृपतिर्व्यधत्त तत्त्वप्रकाशं सः ॥ ५ ॥**

इति । तत्त्वानामपि तत्त्वं स्वरूपं येनाखिलं कृत्स्नमेव हेलयाश्रमेण पूर्वं कथितं, स एव तत्त्वप्रकाशं व्यधत्त विभागेन कृतवानिति । नन्वाप्तकृततत्त्वावबोधेन (न) शास्त्रस्वीकारः । शास्त्रस्वीकारस्य युक्तियुक्तावबोधपूर्वकत्वात् । तदुक्तं भट्टाचार्येण —

"कणान् वा भक्षयेत् कामं माहिषाणि दधीनि वा ।
युक्तियुक्तनिबन्धश्चेत् तद्धि ग्राह्यं मनीषिभिः ॥"

इति । नैतदेवम् । इतरेतराश्रयदोषप्रसङ्गात्[2] । श्रवणे प्रवर्तमानस्य युक्तियुक्तावबोधः, युक्तियुक्तावबोधे सत्येव[3] श्रवणे प्रवृत्तिरिति । तस्मादाप्तकृततत्त्वावबोध एवादौ श्रवणे प्रवृत्तिहेतुः । यथा हि मनुना प्रणीतं व्यासेन प्रणीतमित्यादिक-

१. 'ख्या' क. पाठः. २. 'त् । तथा श्र', ३. 'त्युपश्र' ग. पाठः.

१. 'त' ख. पाठः.

र्तृबहुमानात् प्रवृत्तिरिति युक्तं कर्तृसंकीर्तनामिति। अत्र निवृत्तिः कलाध्वा। तत्त्वाध्वा पृथिवी। भद्रकाल्यादिकालाग्न्यन्तान्यष्टोत्तरशतं भुवनाध्वा। क्षकारो वर्णाध्वा। ळकारो वाष्टाविंशतिपदानि पदाध्वा। सद्योजातहृदयाख्यौ मन्त्राध्वा। पदोद्धार उच्यते—

"चतुर्वर्णं समुद्दिष्टं महादेवपदं हि यत्।
सद्भावेश्वरसंज्ञं तु पञ्चार्णं मुनिसत्तम!॥
महाते[1]ज इति प्रोक्तं पदं वर्णचतुष्टयम्।
पदं पञ्चार्णमुद्दिष्टं योगाधिपतिसंज्ञि[2]तम्॥
मुञ्चमुञ्चचतुर्वर्णं षड्वर्णं प्रथमात्मकम्।
शर्वशर्वपदं चात्र बोद्धव्यं चतुरक्षरम्॥
भवयुग्मं तथा तद्वद् भवोद्भवपदं पुनः।
पदमष्टाक्षरं चान्यत् सर्वभूतसुखप्रदम्॥
सर्वसान्निध्यपूर्वं तु करान्तं सप्तवर्णकम्।
पदमष्टाक्षरं ब्रह्मविष्णुरुद्रपरं परम्॥
अनर्चितं द्वि[3]रभ्यस्तमष्टार्णं पदमुच्यते।
असंस्कृतपदं तद्वत् पूर्वस्थितपदं तथा॥
साक्षि[4]न्तुरुपदे तद्वच्चतुर्वर्णौ[5] द्विरुक्तितः।
षट्पतङ्गपदे वर्णाश्चत्वारः पिङ्गसंज्ञके॥
तद्वज्ज्ञानपदं शब्दसूक्ष्माख्ये चतुरक्षरे।
द्व्यक्षरं स्याच्छिवपदं तथा शर्वपदं विभोः॥

---

१. 'देव इ' ग. पाठः. २. 'ज्ञकम्' क. पाठः. ३. 'द्वु', ४. 'क्षिं', ५. 'र्णौद्विरु' ग. पाठः.

त्र्यक्षरं सर्वदपदं प्रणवादि नमो नमः ।
पञ्चवर्णं शिवायेति त्र्यक्षरं समुदीरितम् ॥
नतियुग्मं पञ्चवर्णं सतारं पदमुत्तमम् ।"

इति । ननु कुतः कथं कलानामुत्पत्तिः । शिवेच्छया बिन्दोरिति ब्रूमः । तदुक्तं गुरुदेवपद्धतौ —

"बिन्दोर्नादात्मकात् तस्माच्छिवेच्छातः प्रवर्तिताः ।
कलाः पञ्च निवृत्त्याद्या यासु विश्वं प्रतिष्ठितम् ॥
मन्त्राः पदैस्तानि वर्णैर्व्याप्तानीह समन्ततः ।
वर्णास्तु भुवनैर्व्याप्तास्तत्त्वैर्व्याप्तानि तानि च ॥
कलाभिस्तानि तत्त्वानि व्याप्तानीह कलाः क्रमात् ।
सदाशिवादिभूम्यन्तं शक्तितत्त्वं व्यवस्थितम् ॥
सदाशिवादिकं त्वेवं स्वकार्यं व्याप्य संस्थितम् ।
चतुर्युगमहापादं पृथिवीतत्त्वकन्दरम् ॥
कालतत्त्वात्तनाभं तत् पञ्चाशद्भावकण्टकम् ।
मायातत्त्वबृहद्ग्रन्थि शुद्धविद्याब्जे[1]शोभितम् ॥
विद्येश्वरदलच्छन्नं शक्तिकेसरसंयुतम् ।
पीठमेवंविधं कल्प्यं मातृकाबीजसंभवम् ॥"

इति ।

"कलाध्वोक्ताङ्गसम्पूर्णो भुवनाध्वोक्तरोमधृक् ।
वर्णाध्वोक्तत्वचोपेतो मन्त्राध्वरुधिरान्वितः ॥
पदाध्वोक्तसिरामांसशुक्लमज्जा[2]स्थितत्त्वगः ॥
सदाशिवषडध्वात्मा तस्य प्राणः शिवः स्मृतः ।

१. 'र' ग. पाठः. २. 'ब्द' क. ख. पाठः.

परावरो महादेवो ध्याने सकलरूपधृक् ॥
निष्कलस्तदभावे तु अष्टात्रिंशत्कलात्मकः ।
आसनं मूर्तिरावाह्यमेतत् त्रितयमध्वनि ॥
व्याप्यव्यापकभावेन ज्ञात्वा यजनमारभेत् ।
आसनं शुद्धविद्यान्तं मूर्तिः शक्त्यन्तगोचरा ।
आवाह्यं शिवतत्त्वं स्यादेतच्छैवानुशासनम् ॥"

इति ॥

इति तत्त्वप्रकाशतात्पर्यदीपिकायां निवृत्त्याख्यः
षष्ठः परिच्छेदः ।

---

यस्याखिलं करतलामलकक्रमेण
देवस्य विष्फुरति चेतसि तत्त्वजातम् ।
श्रीभोजदेवनृपतिः स शिवागमार्थ-
तत्त्वप्रकाशमसमानमिदं व्यधत्त ॥

नमस्तस्मै भगवते भोजायाक्लिष्टकर्मणे ।
शिवाय शिवभक्ताय शिवैकाहितचेतसे ॥
नमः सर्वजगज्जन्मस्थितिभङ्गैकहेतवे ।
सर्वदैकस्वभावाय शिवाय शिवदायिने ॥
तत्त्वप्रकाशव्याख्यानं भक्तिनिर्भरचेतसा ।
अविज्ञाय कृतं यत्तु सन्तस्तत् क्षन्तुमर्हथ ॥

इति भारद्वाजकुलालङ्करणभूतेन शङ्करसूनुना विधिविहित-
सोमरसास्वादनपरितोषिणा शिवाङ्घ्रिकमलद्वयासक्त-
मधुकरायमाणमानसेन श्रीमता श्रीकुमारेण
रचिता तत्त्वप्रकाशतात्पर्यदीपिका
परिपूर्णा ॥

---

शुभं भूयात् ।

# शुद्धिपत्रम् ।

| पृष्ठम्. | पङ्क्तिः. | अशुद्धम्. | शुद्धम्. |
| --- | --- | --- | --- |
| ५६ | ३ | १६ | १७ (एतदनुसारेण विंश-श्लोकमभिव्याप्य संख्या शोध्या ।) |
| १४४ | ४ | ३९ | ३ |
| ,, | ७ | ४० | ४ |
| १४८ | १९ | ह्वा | ह्य |
| १७५ | ७ | ५ | २ |

# READY FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. | 1 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna (Second Edition). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nîlakantha Dîkshita. | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nîlakantha. | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Niti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition) | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Varya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I. 1st & 2nd Kândas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I. 1st & 2nd Sargas). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II. 3rd Kânda). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa). | 0 | 12 | 0 |
| No 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III. 4th, 5th & 6th Kândas). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II. 3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dîpaprabhâ of Nârâyana. | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III. 6th, 7th & 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvasva of Vandyaghatîya Sarvânanda (Part I. 1st Kânda). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Sri Ruyyaka with the Alankârasarvaswa of Sri Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Srî Sankara Bhagavat Pada. | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshîraswamin and Tikâsarvaswa of Vandyaghatîya Sarvananda (Part II, 2nd Kanda 1—6 Vargas). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Srî Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya). | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nilakantha Dikshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânânda Sarasvatî. (Part I.) | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II.) | 2 | 0 | 0 |
| No. 49—गोलदीपिका (Jyotisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः (Alankara) by Singa Bhûpâla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tîkâsarvaswa of Vandyaghatîya Sarvananda (Part III. 2nd Kanda 7—10 Vargas) | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvaswa of Vandyaghatîya Sarvananda (Part IV. 3rd Kanda) | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः (Vedânta) by Prakâsâtmayatîndra | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः (Vyâkarana) | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Sri Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका (Silpa). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् (Kavya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Sri Krishnânanda Saraswatî (Part III.) | 2 | 0 | 0 |
| No. 59—नागानन्दम् (Nâtaka) by Srîharshadeva with the commentary Nâgânandavimarsini of Sivarâma. | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः (Stuti) by Srî Laghubhattâraka with the commentary of Srî Raghavânanda. | 0 | 8 | 0 |

| | RS. AS. P. |
|---|---|
| No. 61—सिद्धान्तसिद्धाञ्जनम् (Vedanta) by Sri Krishnananda Sarasvati (Part IV.) | 1 8 0 |
| No. 62—सर्वमतसंग्रहः (Sarvamatasangraha) | 0 8 0 |
| No. 63—किरातार्जुनीयम् (Kavya) by Bharavi with the commentary Sabdarthadipika of Chitrabhanu (1, 2 and 3 Sargas) | 2 8 0 |
| No. 64—मेघसन्देशः (Kavya) by Kalidasa with the commentary Pradipa of Dakshinavartanatha. | 1 0 0 |
| No. 65—मयमतम् (Silpa) by Mayamuni | 3 8 0 |
| No. 66— महार्थमञ्जरी (Darsana) with the commentary Parimala of Maheswarânanda | 2 8 0 |
| No. 67—तन्त्रसमुच्चयः (Tantra) by Narayana with the commentary Vimarsini of Sankara (Part I. 1–6 Patalas) | 3 4 0 |
| No. 68—तत्त्वप्रकाशः (Agama) by Sri Bhojadeva with the Commentary Tâtparyadipika of Sri Kumara | 2 0 0 |

***Apply to:—***

*The Agent for the sale of*
*Government Sanskrit Publications,*
*Trivandrum.*